वृत्पाठानुरोधेन भाष्याऽविरुद्धा च एकदेशानुमतिद्वारैकाज्ग्रहणेनेयं ज्ञाप्यते। अत्र वधिव्यावृत्त्यर्थमेकाज्ग्रहणमिति शेखरोऽनुपपन्नः प्रमाणरहितश्च। तथाहि "एकाच" इति सूत्रभाष्यम्। वध इट्प्रतिषेध प्राप्नोति वधिषीष्टेति नैष दोषः, आद्युदात्तनिपातनं करिष्यते। अत्र कैयटः आद्युदात्तनिपातनसामर्थ्यात् हन्त्युपदेशविषयाऽनुदात्तत्वाश्रय इट्प्रतिषेधो न भवति नह्येतदाद्युत्तनिपातनम्प्रयोगसमवायि। सतिशिष्टेन प्रत्ययस्वरेण वाधात् इति विवेचयन्तु।

एकाज्ग्रहणमुत्तरार्थमित्यप्ययुक्ततरम्? जागरितः जागरितवानिति "श्र्युक कितो"ति। जागरितवानित्यत्र "जाग्रोऽविची"तिगुणरपरत्वयोरुगन्तत्वाभावान्निषेधाऽप्रवृत्तेः। नचात्रोपदेशाधिकारः? फलाऽभावात्प्रयोजनाऽभावाच्च।

नच स्तीर्णमित्यादाविण्निषेध प्रयोजनमिति वाच्यम्? "इट् सनि वे"ति विकल्पविधानात् "यस्य विभाषे"तीट्प्रतिषेधाश्रयणात्। उत्तरार्थमेकाज्ग्रहणन्न कर्त्तव्यमिति कैयटः। यत्रैकाज्ग्रहणम् यङ्लुगन्ते वेभिदितेति। अङ्गत्वम्विशिष्टस्य धातुत्वन्तु उत्तरखण्डस्येत्यपि सर्वथाऽयुक्ततरमेव। सन्प्रत्ययस्य धातोरेव विधानम् पूर्वभागस्य धातुत्वाऽभावे विभित्स इत्यस्य यस्मात्प्रत्ययविधिस्तदादित्वाऽभावेनाङ्गसंज्ञाया अभावप्रसङ्गात्। अङ्गसंज्ञा पदसंज्ञा च एकाज्द्विर्वचनन्यायेन समुदाये प्रवर्त्तते। भाष्यानुक्तत्वेनेयम्पूर्ववैयाकरणसिद्धान्तविरुद्धेति नाभिप्रायः। इयमनित्या "गुणो यङ्लुको"रिति ज्ञापकात्। एकाज्व्यपदिष्टं हि द्वित्वं यदि यङ्लुकि न प्रवर्तते तर्हि अभ्यासाऽभावात् अभ्यासस्य विधीयमानो गुणो न स्यात्। अत एव जङ्घनीतीत्यत्र "अभ्यासाच्चे"ति "हन्ते"रितिश्तिपा निर्देशेन कुत्वम्भवत्येव। अन्यान्यपि परिभाषाफलान्यूह्यानि। तथाचेयम्परिभाषा भाष्यानुक्ताऽपि लक्ष्यसंस्काराय पूर्ववैयाकरणाभिमतत्वेन कर्त्तव्येति शेखरप्रकार कथमिति विचारयन्तु सूक्ष्मदर्शिनो वैयाकरणम्मन्या इति दिक्।

इति समाप्तं शास्त्रार्थकलाप्रकरणम्।

## समाप्तश्च

श्रीकाशीप्रयागायोध्यामध्यभूमिजन्मसरयूपारीणशुक्लघटिकाशतकशतावधानाशुकविवैयाकरणशिरोमण्याद्यनेकपदवीककौमुदीकल्पलतिकाद्यनेकग्रन्थकारैः श्रीवेणीमाधवशास्त्रिभिविनिर्मितः परिष्कारदर्पणः।

शङ्करोतु हि शङ्करः

# ग्रन्थकृदन्वयपरिचयः

सृष्टिसमये ब्रह्माद्युत्पत्त्यनन्तरं गर्गगौतमशाण्डिल्यादयोऽग्निकल्पा महर्षयस्सम्बभूवुः। महीयांसश्च ते अग्निहोत्रादिवैदिककर्मानुष्ठानाय परमपवित्रं सरयूतटमागत्य यज्ञभूमिम् प्रकल्प्य स्थितास्तत्रैव वर्णाश्रममर्य्यादाम् पालयामासुः। तत्रास्माकं पूर्वजानां गर्गवंशे जनिः, गोरक्षपुरप्रान्तान्तर्वर्त्तिमझवली ( मझौली) ति प्रसिद्धे विश्वसेन ( विसेन ) क्षत्रियपालिते तद्गुरुत्वेन तस्थुः पुराणपुरुषाः। कदाचित्तीर्थयात्राङ्कुर्वन्तस्ते महानुभावाः काशीप्रयागायोध्याभिधतीर्थत्रयमध्यभुवं जौनपुरबदलापुराभिधं मार्गस्थं सक्षत्रियाः प्रापुः। तत्र विशेषतो धर्मविपर्य्ययन्दुष्टजनजन्यं विलोक्य सार्धं विद्यमानं क्षत्रियमाज्ञाप्य कारयित्वा च दुष्टप्रशमं प्रातराराध्याः विजयदत्तशुक्लाः पुत्रचतुष्टयसम्पन्नाः तत्रैव तपस्समाचारमारेभिरे। क्षत्रियकुलललामभूताश्शिष्यास्तेजबहादुरसिंहाभिधाश्च तत एवारभ्य तत्रत्यप्रजास्सम्पालयामासुः। प्रातस्स्मरणीयपादानान्तेषाञ्चतुर्णामेके सर्वतन्त्रस्वतन्त्रा विख्यातभूतलप्रतिष्ठाः षड्दर्शनालङ्कृताः स्वनामधन्याः श्रीटीकारामशुक्लशास्त्रिणः समजनिषत। ते च महानुभावाः शास्त्राध्ययनाध्यापनानन्तरं गार्हस्थ्यं सम्पाद्य स्वज्येष्ठसुताय अधीतशब्दवेदान्तज्यौतिषशास्त्राय देवदत्तनामकाय समर्प्य सम्पत्तिजातम् परमत्यागमाजग्मुः। मान्याश्चामी देवदत्तशुक्लाः यावज्जीवं निर्जीविकमध्यापनञ्चक्रुः। तेषाम् पुत्राः परमादरणीयचरणाः शब्दतर्कशुद्धाद्वैतादिकृतविशिष्टश्रमाः, परममतयोऽनेकग्रन्थकृतःसाधीयांसः कीर्त्तिवर्णशुक्लाः गायत्र्यादिमहानुष्ठानेन तीर्थयात्रादिना साङ्गोपाङ्गं चातुराश्रम्यम्पालयाञ्चक्रुः। तदीयकनिष्ठपुत्रा घटिकाशतकशतावधानाशुकविवैयाकरणशिरोमण्याद्यनेकपदवीभृतः श्रीवेणीमाधवशास्त्रिणोऽस्मज्जनकाःशैशवे स्वमण्डलान्तर्वर्त्तिरुद्रौलीग्रामस्थेभ्यो। वैयाकरणकेसरिश्रीदुर्गादत्तशास्त्रिमहोदयेभ्योऽधीत्य कौमुदीशेखरमनोरमान्यायसिद्धान्तमुक्तावल्यादिग्रन्थान् काशीमागत्य विश्वप्रसिद्धेभ्यो महामहोपाध्यायश्रीजयदेवमिश्रशास्त्रिचरणेभ्योऽधीत्य सपरिष्कृति शब्दतर्कवेदान्तादिशास्त्रं द्वादशवर्षाध्यापनानन्तरं ग्रन्थनिर्माणे प्रवृत्ताः १ हिंसाखण्डनकौमुदी २ कौमुदीकल्पलतिका ३ वैयाकरणभूषणसार (टीका) ४ शक्तिवाद (टीका) ५ व्युत्पत्तिवाद (टीका) ६ परिष्कारदर्पणादिग्रन्थरत्नान्यरचयन्। तच्चरणानुरागाल्लब्धसाधारणशब्दव्युत्पत्तिना तदीयमध्यमपुत्रेण मया कौमुदीकल्पलतिकाख्यर्मपि ग्रन्थो यथामति टिप्पणीभिः परिष्कृत्य संशोध्य च भवतां सेवासु निवेद्यते। आशास्यते चाकिञ्चित्करोऽपि किञ्चित्करोऽयम् भवतामनुरागाद् भविष्यतीति।

| विजयादशमी<br>सं० १९९१ वैक्रमे | प्रार्थयते—विद्वज्जनचरणसेवकः—<br>**श्री राजनारायण शुक्लः।**<br>काशीस्थः |
|---|---|

